पें अवनेजन देवे. । फिर सर्वप्रकारके अन्नमेंसें थोडा २ अन्न लेकें, सहत, घृत, तिल; व्यंजन आदि मिलावे और बीलके
फलकी तरह गोलपिंड १ बुणावे । पिंडके घृत, सहत लगाकें कुशा जल तिल सहित दाहणे हाथमें धारणकरे (हे पितः
ऊनमासिकादि ऊनवार्षिकपर्यंत पचदश श्राद्धके निमित्त यहे पिंड आपके अर्थ है सो आपकों प्राप्तहोवो ) ऐसें कहके

स्वधा। इति कुशोपरि अवनेजनं दद्यात्। किंचिज्जलं पात्रे अवशेषयेत्। ततः सर्वस्मादन्नात्किं
चित्किंचिदुद्धृत्य मध्वाज्य तिल व्यंजनयुतं कृत्वा। बिल्वोपमं पिंडं निर्माय। घृत मधुभ्यामभि
घार्य्य। द्विगुणभुग्न कुशत्रयादिसहितमादाय। ओं अद्यामुकगोत्र पितरमुकशर्मन् वसुरूप ऊन
मासिकादि ऊनाब्दिकांत पंचदश निमित्त एप ते पिंडः स्वधा नमः। इत्युच्चार्य्य। सव्योपगृही
तदक्षिणहस्तेन पितृतीर्थेन कुशोपरि दद्यात्। ततो लेपभागभुजस्तृप्यंतु इति दर्भमूले करं
प्रोंच्छ्य। हस्तौ प्रक्षाल्य। सव्येन आचम्य। हरिं स्मरेत्। ततोऽपसव्यादि कृत्वा। ओं अत्र पितर्मा

दोनों हाथोंसें कुशाकेऊपर पिंड देदेवे. । फिर (लेपभागभुजस्तृप्यंतु०) इसमंत्रसें दर्भोंकी जडमें पिंडकेपास दाहणो हाथ
पुछ देवे और दोनों हाथ धोकें सव्यसें आचमन हरिस्मरण करे. । अपसव्य होकें ( अत्रपितर्मा० ) इस मंत्रको पठताहुवा

वामीतरफसें उत्तरकों मुख करकें प्रसन्न मनसें श्वास बंध करै और उसीतरफ पीछा फिरकें ( ओं अमीमंदत० ) इसकों जपता होया पिंडपें श्वास छोडदेवै। फिर अवनेजन पात्रकों लेकें पिंडपर प्रत्यवनेजन देवै. ( नीवी ) कडमें रखिहोई

दयस्व। यथाभागमा वृपायस्व इति पठित्वा। वामावर्त्तेनोदङ्मूखीभूय।प्रीतमनाः श्वासं नियम्य ।तेनैव यथापरावृत्य।ओं अमीमंदत पितर्यथाभागमावृपायिष्ठ इति जपेत् । ततोऽवनेजन पात्रं गृहीत्वा। ओं अमुक० पितरमुकशर्मन् वसुरूप अत्र प्रत्यवने निक्ष्वते स्वधा नमः ।इति पिंडोपरि प्रत्यवनेजनं दत्वा। नीवीं विस्रंस्य।सव्येन आचम्य।अपसव्यादि कुर्य्यात्।तत ओं नमस्ते पितः रसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्ते पितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितर्नमस्ते गृहान्नः पितर्दत्त सतस्ते पितर्देष्म इति कृतांजलिः पठित्वा। ओं एतत्ते पितर्वासः।इत्यनेन पिंडोपरि सूत्रं ऊर्णादशांवा दत्वा।ओं अमुक० ॥८३॥

तिल दर्भानिकालकें पिंडकेपास रखै। सव्य होकें आचमन करै ।अपसव्य होकें (ओंनमस्तेपित०)इसमंत्रसें अंजली बांधके प्रार्थना करै और ( ओं एतत्ते पितर्वास०) यह मंत्र पठताहुवा सूतका तीन तार या ऊनका फल वा पिंडपें रखकें सक

ल्व रीतिसें त्याग करदेवै। फिर पिताका निमित्त लेकें उसीके पिंडकी मंत्ररहित गंध, (चंदन) पुष्प, तुलसीपत्र, धूप, दीप, तांबूल, पूगीफल, दक्षिणा आदि करकें पूजाकरै। पिंडकेपास पिंडका शेष अन्न विकीरण करदेवै और भोजनपात्रमें (ओं

पितरमुकशर्मन् वसुरूप एतत्ते वासः स्वधा नमः। इत्युत्सृजेत्। ततः पितरमुद्दिश्य तदीयपिंडे तूष्णीं गंध पुष्प धूप दीप तांबूल पूगीफल दक्षिणादीनि दद्यात्। पिंडशेषान्नं पिंडसमीपे विकिरेत्। ततो भोजनपात्रे। ओं शिवा आपः संतु इति जलं। सौमनस्यमस्तु इति पुष्पं। अक्षतं चारिष्टमस्त्विति यवांश्च दत्वा। ओं अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः वसुरूपस्य ऊनमासिकाद्यूनाब्दिकांत पंचदशश्राद्धनिमित्त दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतां इति तिलयुक्तमक्षय्योदकं दद्यात्। ततः प्राङ्मुखः सव्येन कृतांजलिराशिषो गृह्णीयात्। ओं अघोरः पिताऽस्तु इति। ततः ओं गोत्रं नोवर्द्धतां, दातारो नोभिवर्द्धतां, वेदाः संततिरेवच। श्रद्धा

शिवा आप० सौमनस्य० अक्षतं चारिष्ट०) इणवाक्योंकरकें जल, पुष्प, यव, तिल घालकें ऊपरके षष्ठिविभक्तिसहित संकल्पसें अक्षयोदक दानकरै। फिर सव्यहोकें अंजली कियाहोया पूर्वको मुख करकें (ओं अघोरः पितास्तु० ओं गोत्रं

नोरद्धतां० ) इन मंत्रोंकरकें आशीष मागे और अपसव्यसें पिंडकेऊपर त्रिकुश रखकें (ओं उर्ज्ज वहंति०) इस मंत्रकरकें दक्षिणाग्र जलधारा कुशाके ऊपर देवै। फिर अर्घपात्र सूधा करके यथाशक्ति रजत ( चादी ) और कुशा, जल, तिल

च नो माव्यगमत्, बहुदेयंच नोऽस्तु। अन्नंच नो बहुभवेदातिथींश्च लभेमहि। याचितारश्च नः संतु माचयाचिष्मकंच नः। एताः सत्याआशिषः संतु इति वदेत्। ततोऽपसव्यादिकृत्वा। पिंडोपरि सपवित्रकुशत्रयमास्तीर्य। स्वधां वाचयिष्ये। ओं स्वधोच्यतामिति पठित्वा। ओं ऊर्ज्जं वहंतिरमृतं घृत पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितरमिति मंत्रेण कुशोपरि दक्षिणाग्रां जलधारां दद्यात्। ततोऽर्घपात्रमुत्तानीकृत्य। यथाशक्ति रजतद्रव्यं कुशादीनि चादाय ओं अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः वसुरूपस्य कृतैतत् ऊनमासिकादि ऊनाब्दिकांत पंचदश मासिकश्राद्धनिमित्तकैकोद्दिष्टश्राद्धकर्मणः प्रतिष्ठार्थमिदं रजतं चंद्रदेवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दातुमहमुत्सृजे इति ब्राह्मणाय दद्यात्। ततो ब्राह्मणभोजनसंकल्पः।

लेके ऊपरके षष्ठीविभक्तियुक्त वाक्यसे श्राद्धप्रतिष्ठाकेअर्थ दक्षिणा ब्राह्मणको देवे। अनंतर मोदक, जल, तिल लेकें

( अमुकगोत्रनामवाले मेरे पिताजीकि परलोकमें बारह १२ मासतक भूख प्यास दूरहोनेके अर्थ इण कियेहोये ऊनमा-सिक आदि ऊनवार्षिकपर्यंत १५ श्राद्धोंकी सांगता सिद्धिकेलिये पंदर १५ ब्राह्मणोंको भोजन करताहुं ऐसें कहकें ब्रा-

तद्यथा । कुशत्रयादीन्यादाय । देशकालौ स्मृत्वा । ओं अमुकगोत्रस्य अस्मात्पितुरमुकशर्मणः वसुरूपस्य परलोके संवत्सरपर्यंतं क्षुतृषोपशांत्यर्थं कृतैतत् ऊनमासिकादि ऊनाब्दिकांत पंचदश॰ मासिकश्राद्धनिमित्तकैकोद्दिष्ठकर्मणः सांगतासिद्ध्यर्थं पंचदश संख्याकान् ब्राह्मणान् तृप्तिपर्यंतेनान्नेन भोजयिष्ये इति संकल्पयेत् । ततः पिंडमुत्थाप्य स्थाल्यां निधाय अवघ्राणं कृत्वा । पिंडाधस्तृतदर्भं चोल्मुकमग्नौ क्षिपेत् । तत ओं अभिरम्यतामिति विसृज्य। देवताभ्यारिति त्रिःपठित्वा । रक्षादीपं निर्वाप्य। हस्तौ पादौ प्रक्षाल्य । सव्येन आचम्य। ओं प्रमादादिति पठित्वा। कर्मपूर्त्तिकामो विष्णुं स्मरेत् । ततः पिंडादिकं गवा

ह्मणभोजनका संकल्प छोडे । फिर पिंडकों उठाकें थालीमें रखै । सुंगकें पिंडोंके नीचेकी दर्भा उल्मुक अग्निमें डाल-देवे । पश्चात् ( ओं अभिरम्यतां॰ ) इसकों पढकें तीनबेर ( देवताभ्य॰ ) इसमंत्रको जपे और दीपककों नंदाकें हाथ

पर धोरे। तब्यतें आचमन करे ( ओं प्रमादात्० ) इत्यादि कर्मपूर्त्तिकेअर्थ विष्णुस्मरण करे। फिर पिंड आदि गौ बू-
तम, गा, बकरेकों सिला देवे और वैश्वदेव गौ आदिकेअर्थ वलिदानकरनेके अनंतर श्राद्धसामग्री ब्राह्मणकों देकें १५
ब्राह्मणोंकों भोजन करावे। अथवा १५ आमान्न देवे.। फिर ( ओं यस्यस्मृत्या० ) यह पढकें अतिथि, पुत्र, भाई,
दिभ्यो दत्वा।वैश्वदेवबलिकर्माणी कृत्वा।श्राद्धीयद्रव्याणि आचार्याय प्रतिपाद्य।यथाशक्ति पंच
दशप्रभृति ब्राह्मणान् भोजयेत्।तेभ्यः पूर्वसंकल्पितान् पंचदश सान्नोदकुंभान् दद्यात्। तत
ओं यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु।न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युत।मि
ति पठित्वा। अतिथि सुत भृत्य बांधवादिभिः सह भुंजीत। एवमेव मात्रादिश्राद्धप्रयोगः।
ततः पूर्णे संवत्सरे क्षयाहदिने सांवत्सरिकश्राद्धं कुर्य्यात्।इति ऊनमासिकाद्यूनाब्दिकांत पंचद
श मासिका श्राद्धनिमित्तकैकोद्दिष्टश्राद्धपद्धतिः समाप्ता। ओं गदाधरार्पणमस्तु ॥ ॥ अथ
नोकर बांधव, मित्र आदिकरकें सहित भोजन करे। इसीतरे माता, भाई, चाचे आदिका श्राद्ध करे और पूर्ण संवत
होनेमें मरणके दिन सांवत्सरिक श्राद्ध करे। इति ऊनमासिकादि पंचदश श्राद्धविधिः समाप्तः। प्रथम श्राद्धके पहिले

सांवत्सरिकैकोद्दिष्टश्राद्धप्रयोगः॥ तत्र तावत्पूर्वेद्युर्निरामिषमेकवारं भुक्त्वा। श्राद्धदिने प्रातः श्वेतवस्त्रयुगलेन स्नात्वा। नित्यावश्यकं समाप्य। पाकभूमिं गोमयादिना संस्कृत्य। तत्र नूतनपात्रेषु यथाशक्त्युत्कृष्टमन्नं नानाप्रकारं सपिंडस्त्रीद्वारावा पाचयेत्।स्वयं वा पचेत्।ततः श्राद्धभूमिं गोमयोदकेनोपलिप्य। ज्वलदंगारैः संशोध्य। गौरमृत्तिकयाच्छाद्य। तिलैर्गौरसर्षपैश्च विकीर्य वस्त्रादिना वेष्टयित्वा। तत्रश्राद्धसामग्रिं संपादयेत्। ततो मध्यान्हे पुनः स्नात्वा। धौतशुक्लवास

दिन ( निरामिष ) मास आदि निषिद्ध वस्तु त्यागकें उत्तम हविष्यान्नका एकभक्त भोजनकरै। फिर रात्रिमें भाइयोंकों नोंता देके प्रातःकाल सुपेद धोति अंगोछा लेके स्नान करै और संध्याआदि नित्यकर्म्म समाप्ति करकें पाकभूमिकों गोमय, मिट्टी, जलद्वारा शुद्ध करै। फिर तहां नवीन शुद्ध पात्रोंमें शक्तिमुजब अच्छे अन्न नानातरहके भाइ बांधव स्त्री आदिके द्वारा करावे। अथवा खुद यजमान करै। पश्चात् श्राद्ध करणेकी भूमिपें गोमय जल आदिका लेपा करै और जलता होया तृण लेके फेरै। फिर बारीक साफ वालुका या मिट्टी बिछाके तिल सरसोंका विकीरण करै और वस्त्र आदिसे वेष्टन करकें तहा श्राद्धसामग्री संपूर्ण स्थापन करदेवै। फिर मध्यान्हमें अर्थात् ग्यारह

बजेके अनंतर स्नान करके सुपेद वस्त्र पहिरे और श्राद्धस्थानमें आके आसनके समीप तिलोंके तेलसे भराहुवा दीपक जलाके ब्राह्मणकेद्वारा दीपककी वायु आदिसे रक्षा करे और काग, मुर्गा, कुत्ता, चील, सूर, मार्जार आदि निषिद्ध जानवरोंको दूर हटा देवे। कारण यह जानवर श्राद्धको नाश करतेहै। पश्चात् श्राद्ध करने वाला आसनपे

सी परिधाय। श्राद्धस्थानमागत्य।अन्नाभिप्रायेण सिद्धमित्यभिधाय।आसनसमीपे तिलतैलेन दीपं प्रज्वाल्य।स्थापयेत्। दीपरक्षा द्विजेन कार्या।काककुक्कुटादीन् श्राद्धापहंतॄनपसारयेत्।त तः कर्ता स्वासने प्राङ्मुख उपविश्य।पवित्रे धृत्वा।सव्येन आचम्यप्राणानायम्य। कर्मपात्रं ज ल तिल गंध पुष्पादिभिः परिपूर्य। ओं अपवित्रः पवित्रोवा सर्वावस्थां गतोपि वा। यः स्मरे त्पुंडरीकाक्षं सबाह्याभ्यंतरः शुचिः।१। ओं पुंडरीकाक्षः पुनात्विति पठित्वा। कुशत्रयानीत जलेन श्राद्धीयद्रव्याणि स्वात्मानंच सिंचेत्।तत ओं वैष्णव्यै नमः। ओं काश्यप्यै नमः। ओं

पूर्वको मुख करके बैठे। सव्य होके पवित्र धारण करके आचमन करे ( अपवित्र० ) इस श्लोकको पढके। पुंडरीकाक्षका स्मरण करताहुवा दर्भोकेद्वारा जलकरके श्राद्धसामग्रीको तथा स्वशरीरको पवित्र करै। पश्चात्

अक्षय्यायै नमः । ओं भूम्यै नमः । इति नत्वा। ओं भगवत्यै गयायै नमः । ओं भगवते गदाधराय नमः। इति मनो वाक्कायैर्नमस्कारं कुर्यात्। ततः कुशत्रय तिल जलान्यादाय। देशकालौ संकीर्त्य। ओं अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः वसुरूपस्य सांवत्सरिकैकोद्दिष्टश्राद्धमहं करिष्ये । इति संकल्प्य । गायत्रीं त्रिर्जपित्वा । ओं देवताभ्यः पितृभ्यश्च महायोगिभ्य एवच नमः स्वाहायै स्वधायै नित्यमेव नमोनमः इति त्रिः पठेत्। ततोऽपसव्येन तिल गौरसर्षपान् गृहीत्वा । ओं नमो नमस्ते गोविंद पुराण पुरुषोत्तम । इदं श्राद्धं हृषीकेश रक्षतां सर्वतो दिशः

( देवताभ्यः० ) इत्यादिनामोंसें भूमिको नमस्कार करके गया और गदाधर भगवानको मन वाणी काया करके नमस्कार करे। फिर तांबेके पात्र आदिमें त्रिकुश, तिल, जल, चंदन, पुष्प आदि लेकें संवत्, ऋतु,मास,पक्ष, तिथि,वार आदिका उच्चारण करकें अपने पिताका गोत्र तथा नाम उच्चारण करे और कहैकी अमुकगोत्र अमुकनामवाले मेरे पिताजीका सांवत्सरिक एकोद्दिष्ट श्राद्ध करताहूं। ऐसे कहके पात्रका जल आदि भूमिपें त्याग देवे। फिर ब्राह्मणकी आज्ञा लेकें तीनवेर गायत्रीका तथा ( देवताभ्यः० ) इत्यादि मंत्रका जप करे। पश्चात् अपसव्यहोकें तिल और सपेद सिरसों वाम

हाथमें धारण करै और ( नमोनमस्ते० अग्निष्वाताः पितृगणा० ) इत्यादि मंत्रोंकरकें पूर्व दक्षिण पश्चिम उत्तर दि-
शाओंमें तथा चारों कोण ओर नीचे तथा ऊपरकों सर्वत्र विकरण करै। फिर तिल दर्भा लेके वाम या दक्षिण पा-

१ ओं अग्निष्वात्ताः पितृगणाः प्राचीं रक्षंतु मे दिशं।तथा बर्हिषदः पांतु याम्यां येपितरः स्थि
ताः २ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः।अधोर्ध्वमपि कोणेषु हविष्मंतश्च सर्वदा ३
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः । सर्व्वतश्चाधिपस्तेषां यमो रक्षां करोतु वै४वायुभूतापितॄ
णांच तृप्तिर्भवतु शाश्वती ॥ इत्यनेन पूर्वादि दिक्षु अधस्थादूर्ध्वकोणेषु च सर्व्वत्र तिलान् गौ
रसर्षपांश्च विकीर्य।वामे दक्षिणे वा कटिभागे नीवीबंधं कुर्यात्। ततः सव्येन कस्मिंश्चित्पात्रे
जलं गृहीत्वा । दर्भैरालोड्य।ओं यद्देवा देवहेडनं देवासश्चकृमा वयम्।अग्निर्म्मा तस्मादेनसो
विश्वान् मुञ्चत्वꣳहसः १ यदि दिवा यदि नक्तमेनांसि चकृमा्वयम् । वायुर्म्मा तस्मादेन

र्श्वके कटीवस्त्रमें धारणकरे। इसकों नीवीबंधन कहतेहैं। पश्चात् सव्य होके ताबे आदिके पात्रमें जल डाले और उस
पानीको दर्भा करकें आलोडन अर्थात् हिलावे और ( यद्देवादेवहेडनम्० ) इत्यादि तीन मत्रोंकरकें अभिमंत्रणकरे।

फिर रजस्वला, श्वान आदिकी दृष्टिसें तथा शूद्र आदिके स्पर्शसे पाककी अशुद्धि दूर करणेके लिये उसी जलका द-
र्भोसें अन्न आदि सामग्रीका प्रोक्षणकरे। पश्चात् अपसव्य दक्षिणमुख पातितजानु करके बीचसें दूणी ओर बटेहुए त्रि-

सो विश्वान् मुञ्चत्वर्ठ०हसः २ यदि जाग्रद्यदि स्वप्न एनाठं०सि चकृमावयम्।सूर्यो मा तस्मा
देनसो विश्वान्मुञ्चत्वर्ठ०हसः३ इति कूष्मांडसूक्तेनाभिमंत्र्य। ओं उदक्यादि दृष्टिपातात् शू
द्रादिसंपर्कदोषाच्च पाकादीनां पवित्रताऽस्तुइति पाकादीन् संप्रोक्ष्य।हरये निवेदयेत्। ततोऽ
पसव्यं कृत्वा। द्विगुणभुग्न कुशत्रय तिल जलान्यादाय।ओं अद्याऽमुकगोत्राऽस्मत्पितरमुकश
र्मन् इदमासनं तुभ्यं स्वधा इत्युच्चार्य्य।पितृतीर्थेन मोटकरूप दक्षिणाग्रकुशत्रयात्मकमासनमु
त्सृजेत्।तत ओं अपहताऽसुरारक्षाठं०सि वेदिषद इत्यासनोपरि तिलान् विकीर्य्य(आयन्तुन
इति मंत्रं जपेत् नवा ) ततोऽर्घपात्रोपरि पवित्रं धृत्वा।तत्र ओं शन्नो देवीरभिष्टयऽआपो भव

कुशा तिल जल सहित लेवें। फिर अपने पिताका गोत्र नाम उच्चारण करके पितृतीर्थसे आसनके अर्थ देदेवे और सं-
कल्पका जल वेदिमें छोडदेवे। आसन देनेके अनतर ( अपहता० )इसमत्रसें आसनपर तिल गेरें और( आयन्तुनः० )

इसमन्त्रको पढै अथवा नहिभी पढै। कारण एकोद्दिष्टमें आवाहन मन्त्रका त्याग होनेसें पश्चात् अर्घपात्र रखके उसमें पवित्री अर्थात् प्रादेशमात्र दर्भाका दो पत्ता अग्रभाग धरै और (शन्नोदेवी०) इसमन्त्रको पढकें जल घालै। तथा (तिलोसि०) इसमन्त्रसे तिल गेरै और मन्त्रके विनाही चंदन पुष्प आदि घालदेवै। पश्चात् अर्घपात्रको वामहाथमें लेकें

न्तु पीतये।शन्नोऽभि स्रवन्तु न इति मन्त्रेण जलं प्रक्षिप्य।ओं तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः।प्रत्नमद्भिः पृक्तः स्वधया पितॄंल्लोकान् प्रीणाहि नः स्वधा इतितिलान् तूष्णीमेव गंध पुष्पे निक्षिपेत्।ततोऽर्घपात्रसंपत्तिरस्तु इति पठित्वा।अर्घपात्रं वामहस्तेकृत्वा।तत्रस्थं पवित्रं पितृपात्रे धृत्वा। ओं यादिव्या आपः पयसा संबभूवुर्याऽअन्तरिक्षा उत पार्थिवीर्याः हिरण्यवर्णा यज्ञियास्तानऽआपः शिवाः शꣳ स्योनाः सुहवा भवंतु इत्यर्घपात्रमभिमंत्र्य दक्षिणहस्ते कृत्वा।ओं अमुकगोत्र अस्मत्पितरमुकशर्मन् एषते हस्तार्घः स्वधा नमः इत्युच्चार्य

पवित्री पत्तेपर स्थापन करे और (यादिव्या०) इसमन्त्रसें अर्घपात्रका जल मन्त्रकरकें द्विगुणभुग्न अर्थात् मोटक तिल जल लेके पिताका गोत्र नाम उच्चारण करै और संकल्परीतिसें अर्घपात्रका जल दाहिने हाथकरकें पितृतीर्थसें पवित्री

पे थोडा देयदेवे और अर्घपात्र जलसहित अगाडी स्थापन करदेवे। पश्चात् सव्यहोके ( आपः शिवा० )इसमंत्रकरके
अर्घपात्रके जलका शिरपें अभिषेक करै। फिर अपसव्य आदि होके ( पित्रेस्थानमसि० ) इसमंत्रसें अर्घपात्रकों आ-
सनके वामे वाके नीचेको मुख करकें स्थापन करदेवे परंतु दक्षिणादिये पहिली पात्रकों वहासे उठावे नही। फिर गंध,

पितृतीर्थेन पवित्रोपरि सावशेषं अर्घं दद्यात्। अर्घपात्रंच पुरतः स्थापयेत् ( ततः सव्येन
ओं आपः शिवाः शिवतमाः शांताः शांततमास्ते कृण्वंतु भेषजमिति शिरस्यभिषेकं कृत्वा )
अपसव्यादिना ओं पित्रेस्थानमसीत्युक्त्वा। अर्घपात्रमधोमुखं पितृवामपार्श्वे निदध्यात्।
एवंस्थितं अर्घपात्रं दक्षिणादानपर्यंतं नोद्धरेन्न चालयेत्। ततो गंध पुष्प धूप दीपादिकं
धृत्वा। द्विगुणभुग्नकुशत्रयादीन्यादाय। ओं अमुकगोत्र अस्मत्पितरमुकशर्मन् एतानि गंध
पुष्प धूप दीप तांबूल पूगीफल यज्ञोपवीत वासांसि तुभ्यं स्वधा। इत्युत्सृजेत्। तत ओं अ

मोटक तिल जल दाहने हाथमें लेवे
पुष्प, धूप, दीप, नागरपान, सुपारी, यज्ञोपवीत, वस्त्र आदि पिताके आसनपे रखकें
और पिताका गोत्र नाम उच्चारणकरके गंध पुष्प आदि पिताके अर्थ संकल्प रीतिसें करदेवे और संकल्पका जल अ-

गाडी त्यागनकरे। फिर हाथ जोडकर प्रार्थना करे और अगाडी पडाहुवा पुष्प तिल आदि दूरकरके भोजनपात्रस्थापनकरणेके अर्थ जलसे जगह धोवे और पात्रदेकें सुपेद बारीक मीट्टीसें या जलसें आसनके बाहर मंडलकरे। यह मंडल ब्राह्मणके चतुरस्र, क्षत्रियके त्रिकोण, वैश्यके गोलकरणा चाहिये। यदि दूसरेका मकान या जगें होवेतो भूस्वामिके

चैनंसंपूर्णमस्त्वित्युक्त्वा। भोजनपात्रस्थापनदेशं संमार्ज्य। पात्रं दत्वा। गौरमृत्तिकया जलेनवा आसनं वेष्टयित्वा। मंडलं कुर्य्यात् (अत्र परकीयभूमौ श्राद्धकारणे ओं इदमन्नं भूस्वामिपितृभ्यो नमः। इति घृतादियुक्तमन्नं दर्भोपरि क्षिपेत्। स्वसत्वेतु न दद्यात्) ततो भोजनपात्रे उष्णमन्नंसघृतं अनेकव्यंजनयुतं सुशितलजलसहितं यथावत् परिविश्य मधु दत्वा। ओं मधुवाताऽऋतायते इति मंत्रत्रयेण ओं मधु मधुमध्विति चाभिमंत्रयेत्। ततोऽन्नपात्रं न्यु

अर्थ घृतयुक्त अन्नकी (इदमन्नं भूस्वामि०) इसमंत्रसें बलिदेवै। यदि जीवताहोवेतो किराया देदेवै और अपने घरमें श्राद्ध करनेवाला तथा तीर्थ क्षेत्र आदिमें यह बलि नहि देवै। पश्चात् भोजनपात्रकेविषे गरम अन्न घृत व्यंजन शाग सहित परोस देवै और शीतल जलकापात्र पास रखे। फिर अन्नपें सहत लगाके (मधुव्वाता०)(मधु मधु मधु) इण

तीनमंत्रोंकरकें अभिमंत्रणकरै। फिर अन्नपात्रकों दोनों ऊंधेहाथोंसें ( व्यस्त ) जुदा २ ऊपरथली रखकें स्पर्शकरै ओं
पृथ्वी ते पात्रं० ) ओं ( इदं विष्णुर्विचक्रमे० ) यहै २ मंत्रपढकें अपने ऊधे कियेहोये दाहणे हाथके नखरहित अंगुठे-

जपाणिभ्यां व्यस्ताभ्यां स्पृष्ट्वा। ओं पृथ्वी ते पात्रं द्यौरापिधानं ब्राह्मणस्य मुखेऽअमृतेऽअमृतं
जुहोमि स्वधा इति पठित्वा। ओं इदम्विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्यपाठं०
सुरे इत्येतामृचं च जप्त्वा। स्वांगुष्ठमधोमुखमनखं। ओं विष्णो कव्यर्ठं० रक्ष इति यजुषाऽ
न्नेनिवेश्य। इदमन्नन्। इमाआपः। इदमाज्यं। एतत्सर्वं कव्यामिति पठित्वा। ओं अपहताऽ
असुरा रक्षार्ठं०सि वेदिपदः इति अन्नपात्रपरितास्तिलान् विकीर्य्य।वामकरेण पात्रमत्यजन्।द
क्षिणकरेण द्विगुणभुग्नकुशत्रयादीन्यादाय।ओं अद्यामुकगोत्र अस्मत्पितरमुकशर्मन् इदमन्नं
कव्यं सोपस्करं परिविष्टममृतरूपं तुभ्यं स्वधा इत्युदकं पितृतीर्थेन पित्रासनवामभागे भूमौ

कों अन्नके ( ओं विष्णो कव्यर्ठं० रक्ष० ) इस मंत्रसें लगावे और ( ओं इदमन्नं० ) इत्यादि पढकें ( ओं अपहता० )
इसमंत्रसें अन्नपात्रके बाहरकर तिल विकीरणकरै। फिर वामें हाथसें अन्नपात्रकों नहि त्यागता हुवा दाहणे हाथमें मो-

टक तिल जल लेके ऊपरके संकल्पसें पिताके अर्थ करे। संकल्पका जल वामभागमें भूमिपें त्याग देवे.। फिर ( ओं अन्नहीनं० ) इसमंत्रसें प्रार्थना करकें सव्यसें ओंकारव्याहृतिसहित गायत्रीका तीनवेर जपकरे और अंजली करकें

क्षिपेत्। तत ओं अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्।तत्सर्वमच्छिद्रमस्त्विति प्रार्थ्य।स व्येन सव्याहृतिकां सप्रणवां गायत्रीं त्रिः सकृद्वा जपेत्। कृतांजलिर्दर्भेष्वासीनः। ओं मधुवा ताऽऋतायते मधु क्षरन्ति सिंधवः।माध्वीर्न्नः संत्वोषधीः १ मधु नक्तमुतोषसो मधुमत्पार्थिव ठं० रजः।मधु द्यौरस्तु नः पिता २ मधुमान्नो वनस्पतिर्मधुमाँऽअस्तु सूर्य्यः।माध्वीर्गावो भवं तु नः ३ इति ऋचं मधु मधु मध्वीति च जपेत्। तत ओं कृणुष्वपाजः प्रसितिन्न पृथ्वीं य्या हि राजेवामवाँऽइभेन। तृष्वीमनुप्रसितिं द्रूणानोस्तासि विध्य रक्षसस्तपिष्ठैः १ तव भ्रमासऽ आशु यापतंत्यनु स्पृश धृषताशोशुचानः। तपूंठ०ष्यग्ने जुह्वापतंगा न संदितो विसृज व्विष्व गुल्काः २ प्रतिस्पशो विसृजतूर्णितमो भवापायुर्विशोऽअस्या अदब्धः। यो नो दूरेऽअघश

( ओं मधुवाता० ) इत्यादि तीनमंत्र ( ओंकृणुष्वपाज० )

( ओसहस्रशीर्षा० )
इत्यादि रक्षोघ्न पांच मंत्र जपे। फिर तिल विकीरण करके ( ओउदीरता० ) इत्यादि १३ मत्र
इत्यादि १६ मंत्र. ( ओआशुःशिशानो० ) इत्यादि अप्रति रथ मंत्र १७ जपे और ( ओंसप्तव्याधाः० ) इत्यादि

ठं०सोयोऽअन्यग्नेमा किष्ठेव्यथिरादधर्षीत् ३ उदग्ने तिष्ठ प्रत्यांतनुष्वन्यमित्रा ठं·ओषता ति
ग्महेते। यो नोऽअरातिठं० समिधानचक्रे नीचातं धक्ष्यत सन्नशुष्कम् ४ उर्ध्वो भव प्रति
व्विध्याध्यस्मदाविष्कृणुष्वदेव्यान्यग्ने। अवस्थिरातनुहियातुजूनां जामिमजामिम्प्रमृणीहि
शत्रून् ऽअग्नेष्वातेजसा सादयामि ॥ ५ ॥ इति रक्षोघ्नीः पंचऋचः पठित्वा। भूमौ तिलान् वि
कीर्य। पितरं चिंतयन्। ओं उदीरतामवर इत्यादि त्रयोदश मंत्रान्। ओं सहस्रशीर्षा पुरुष इति
पुरुषसूक्तं। ओं आशुः शिशानो इत्याद्यप्रतिरथं च जपेत्। तत ओं सप्तव्याधा दशार्णेषुमृगाः
कालंजरे गिरौ। चक्रवाका शरद्द्वीपे हंसाः सरसि मानुषे १ तेभिजाताः कुरुक्षेत्रे ब्राह्मणा वेद
पारगाः। प्रस्थिता दूरमध्वानं यूयं तेभ्योऽवसीदथ २ इति हविः स्तोत्रं। अन्यानि च सप्तार्चि

हविस्तोत्र और रुचिस्तोत्रप्रभृति अन्य पवित्र स्तोत्र शक्तिमाफ़िक

जपै। फिर अपसव्य करकें भोजन पात्रके समीप जलसें भूमि धोकें दक्षिणाग्र त्रिकुशा रखै और सर्वतरहका अन्न, व्यंजन, तिल, जलसहित लेकें।( ओं अग्नि दग्धा० ) इस मंत्रकरकें कुशाके ऊपर विकीरण करै और सव्यसें आचम-

र्चिस्तवप्रभृतीनि यथाशक्ति जपेत् । ततोऽपसव्यादिना। उच्छिष्टसन्निधौ भूमिं प्रोक्ष्य।तत्र दक्षिणाग्रं कुशत्रयमास्तीर्य्य। सर्वप्रकारमन्नं सव्यंजनमुद्धृत्य। सतिलमेकीकृत्य। ओं अग्निदग्धाश्च ये जीवा येप्यऽदग्धाः कुलेमम।भूमौ दत्तेन तृप्यंतु तृप्ता यांतु परां गतिं १ इतिमंत्रेण कुशोपरि तदन्नं विकीर्य।सव्येन आचम्य।हरिं स्मृत्वा।पूर्ववत् गायत्रीं।मधुवाता इति ऋचं मधु मध्विति च जपेत्। ततोऽपसव्येन उच्छिष्टसन्निधौ चतुरस्रं दाक्षिणप्लवं स्थानं निर्माय।तन्मध्ये दर्भपिंजुलीमूलेन ओं अपहताऽअसुरा रक्षाᳬसि वेदिषद इति वामान्वारब्ध। दक्षिणकरेण प्रा

न, हरिस्मरण करै। फिर तीनवेर गायत्रीजप ( ओंमधुवाता० ) इत्यादि तीनमंत्रोंका जप करै और अपसव्यसें भोजनपात्रके समीप चोकोंण दक्षिणकों नीचा एक स्थान ( वेदी ) बनावे। फिर उसके बीचमें दो पत्तेवाली दर्भाकरकें

( ओंअपहता० ) इसमंत्रसें दक्षिणाग्र एक रेखा निकालके दर्भाकों उत्तरदिशामें त्यागदेवै। फिर ( ओंयेरूपाणि० ) इसमत्रमें अग्निसें जलताहुआ ( उल्मुक ) काष्ठकाशकू रेखाकेऊपर भ्रमाके दक्षिणमें स्थापनकरें। पश्चात् मूलकनेसें अछिदर छेदन करिहोई त्रिकुशा रेखाकेऊपर धरकें( देवताभ्यः० )इस मत्रकों तीनवेर पढै।फिर तिल जल सहित एक

देशमात्रांरेखां दक्षिणाग्रां समुल्लिख्य । दर्भपिञ्जुलीमुत्तरस्यां दिशी निक्षिपेत्। तत ओं येरूपाणि प्रतिमुंचमानाऽअसुराः सन्तः स्वधया चरंति । परा पुरो ये भरन्त्यग्निष्ठांल्लोकात्मणु दात्यस्मादिति मंत्रेण ज्वलदुल्मुकं रेखोपरि भ्रामयित्वा । दक्षिणतो निदध्यात् ॥ तत उपमूल सकृल्लून कुशत्रयं रेखोपरि स्तीर्त्वा । देवताभ्यरिति त्रिर्जपित्वा । सतिलजलपात्रं गृहीत्वा । ओं अमुकगोत्र अस्मत्पितरमुकशर्मन् अत्रावनेनिक्ष्वते स्वधा इति कुशोपरि अवनेजनं दद्यात्। ततः सर्वस्मादन्नात्किंचित्किंचिदुद्धृत्य। मध्वाज्य तिल सर्व व्यंजनयुतं पात्रे

पात्र लेकें पिताका गोत्र नाम उच्चारण करे और कुशाकेऊपर अवनेजन देवै.। फिर सपूर्ण अन्नमेंसें थोडा २ लेकें सहत, घृत, तिल, व्यंजन आदि

मिलावै और बीलके फलकी माफिक पिंड बनाके, सहत, घृतकामालस करै। फिर मोटक तिल जलसहित पिंड लेकें पिताके गोत्र नामसे दोनों हाथसें वेदीपें पिंड धरै और ( लेपभागभुजस्तृप्यतु० ) यहै मंत्र पढकें दाहणे हाथके लगाहुवा अन्न पिंडकेपास पुछके डालदेवै। फिर हाथ धोकें सव्यसे आचमन, हरिस्मरण करै और अपसव्य होकें ( ओंअत्र-

कृत्वा। बिल्वोपमं पिंडं निर्माय। मधुघृताभ्यामभिवार्य्य। द्विगुणभुग्नकुशत्रयादि सहितमादाय। ओं अमुकगोत्र अस्मात्पितरमुकशर्मन् वसुरूप एष ते पिंडः स्वधा नम इति सव्योपगृहीत दक्षिण हस्तेनावनेजनस्थाने पिंडं दद्यात्। ततो लेपभागभुजस्तृप्यंतु इति दर्भमूले करं प्रोंच्छ्य। हस्तौ प्रक्षाल्य। सव्येन आचम्य। हरिं स्मरेत्। ततोऽपसव्यं कृत्वा। ओं अत्र पितर्माद यस्व यथाभागमावृषायस्व इति पठित्वा। वामावर्तेनोदङ्मुखीभूय। प्रीतमनाः श्वासं नियम्य

पितर्माद० ) इस मंत्रकों पढताहुवा व मतरफसें उत्तरकों मुख करकें प्रसन्नमनके द्वारा श्वास बधकरकें ऊसीतरे पीछा हटकें ( ओंअमीमदत० ) इसमंत्रसें पिंडपे श्वास छोडदेवै। फिर अवनेजनपात्र लेकें पिंडपें प्रत्यवेनजन देवै

(नीवी) कडमें रखिहोईं तिल कुशा पिंडकेपास गेरदेवै । और सव्यसे आचमन करै । फिर अपसव्य हाके (ओंनमस्तेपित०) इसमंत्रसें अंजली कियाहुवा प्रार्थना करै और (ओं एतत्ते पितर्वासः०) यहै मंत्र पढकें

तेनैव यथा परावृत्य । ओं अमी मदंत पितरोयथाभागमावृषायिष्ट इति जपेत् । ततः पूर्वदत्ता वनेजनपात्रेण । ओं अमुकगोत्र पितरमुकशर्मन् अत्र प्रत्यवनेनिक्ष्वते स्वधा । इति पिंडोपरि प्रत्यवनेजनं दत्वा । नीवीं विस्रंस्य । सव्येन आचामेत् । ततोऽपसव्येन । ओं नमस्ते पितः रसाय नमस्ते पितः शोषाय नमस्ते पितर्जीवाय नमस्तेपितः स्वधायै नमस्ते पितर्घोराय नमस्ते पितर्मन्यवे नमस्ते पितर्नमस्ते गृहान्नः पितर्दत्तसतस्ते पितर्द्देष्म इति कृतांजलिः पठेत् । तत ओं एतत्ते पितर्वासः इति पठित्वा । पिंडोपरि सूत्रं ऊर्णादशां वा पंचाशद्वर्षोपरि यजमानहृदयलोमानिवा दत्वा । ओं अमुकगोत्र पितरमुकशर्मन् एतत्ते वासः स्वधा इत्युत्सृ

सूतका तीन तार अथवा ऊनका नाका या बुढे यजमानके छातिका सुपेद बाल पिंडपें देकें संकल्पद्वारा त्याग

करदेवै। फिर पिताका निमित्त लेकें मन्त्ररहित पिंडपें गंध, पुष्प, धूप, दीप, ताम्बूल, पूगीफल, दक्षिणा अर्पणकरकें पिंडका शेष अन्न पिंडके पास विकीरण करदेवै। पश्चात् भोजनपात्रमें ( ओंशिवाआप० ) इस मन्त्रसें जल( ओं सौमन-

जेत्। ततः पितरमुद्दिश्य। तदीयपिंडे तुष्णीमेव गंधपुष्पधूपदीपतांबूलपूगीफलदक्षिणादीनि दत्वा। पिंडशेषान्नं पितृसमीपे विकिरेत्। ततो भोजनपात्रे। ओं शिवा आपः संतु इतिजल। ओं सौमनस्यमस्त्विति पुष्पं।ओं अक्षतं चारिष्टमस्तु इति यवतिलांश्च दत्वा। ओं अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः वसुरूपस्य दत्तैतदन्नपानादिकमक्षय्यमुपतिष्ठतामिति तिलयुक्तमक्षय्योदकं दद्यात्। ततः प्राङ्मुखः सव्येन कृतांजलिराशिषो गृह्णीयात् । ओं अघोरः पिताऽस्तु इति। तत ओं गोत्रं नो वर्द्धतां,दातारो नोभिवर्द्धतां,वेदाः संततिरेवच।श्रद्धा च नो माव्यगमद्बहुदेयं च नोऽस्तु,। अन्नं चनो बहुभवेदतिथींश्च लभेमहि। याचितारश्च नः

स्य०)इससें पुष्प,(ओं अक्षतं चारिष्ट० )इसमन्त्रसें यव तिल गेरैं और मोटक आदिलेके षष्ठिविभक्तियुक्त वाक्यसें पिताकों अक्षयोदकदेवै।फिर सव्यस पूर्वकों मुख करकें अंजली कियाहुवा(ओं अघोर॰ पितास्तु०)(ओं गोत्र नोवर्द्धता०) इत्यादि

मत्रों करकें आशीपमागे.। फिर अपसव्य होकें पिंडके ऊपर पवित्री सहित त्रिकुश रखकें (ओं ऊर्जंवहति०) इस मंत्रसे
दक्षिणाग्रजलधारा दानकरै। पश्चात् अर्घपात्र सूधा करकें शक्तिमाफिक रजत दक्षिणा और मोटक तिल जल लेवे और
संतु माचयाचिष्म कंचन। एताः सत्या आशिपः संतु इति वदेत्। ततोऽपसव्यं कृत्वा। पिंडो
परि सपवित्रं कुशत्रयमास्तीर्य। स्वधां वाचयिष्ये। ओं स्वधोच्यतामिति पठित्वा। ओं ऊर्ज्जं
वहंतिरमृतं घृतपयः कीलालंपरिश्रुतं स्वधास्थतर्पयत मे पितरमिति सपवित्र कुशोपरि दक्षि
णाग्रां जलधारां दद्यात्। ततोऽपात्रमुत्तानीकृत्य। यथाशक्ति रजतदक्षिणां कुशत्रयादीनि
चादाय। ओं अमुकगोत्रस्य अस्मत्पितुरमुकशर्मणः वसुरूपस्य कृतैतत्सांवत्सरिकैकोद्दिष्ठ
श्राद्धप्रतिष्ठार्थमिदं रजत चंद्रदैवतममुकगोत्रायामुकशर्मणे ब्राह्मणाय दक्षिणात्वेन दातुमह
मुत्सृजे। इति दद्यात्। ततो द्विगुणभुग्न कुशत्रयादीन्यादाय। ओं अमुकगोत्रस्यास्मत्पितुर
मुकशर्मणः वसुरूपस्य कृतैतत्सांवत्सरिकश्राद्धकर्मणः सांगतासिद्ध्यर्थं अमुकसंख्याकान्
अपने पिताका नाम षष्ठिविभक्तिसहित लेकें ब्राह्मणकों दक्षिणा दानकरै। फिर ब्राह्मण भोजनका संकल्पलेकें पिंडकों

उठावे और थालीमें रखके सुगें । पिंडके नीचेकी दर्भा, उल्मुक अग्निमें डालदेवै । फिर ( ओं अभिरम्यता० ) यहै पढके विसर्जनकरे ( देवताभ्य० ) इस मन्त्रकों तीनवेर पढके दीपक निवावै और हाथ पग धोके सव्यसें तीनवेर आच-

ब्राह्मणान् तृप्तिपर्य्यंतेनान्नेन भोजयिष्ये । इति संकल्प्य । पिंडमुत्थाप्य । स्थाल्यां निधाय । अवघ्राणं कृत्वा । पिंडाधस्तृतदर्भं चोल्मुकमग्नौ निक्षिपेत् । तत ओं अभिरम्यतामिति विसृज्य देवताभ्यरिति त्रिः पठित्वा । रक्षादीपं निर्वाप्य । हस्तौपादौप्रक्षाल्य । सव्येन आचम्य । ओं प्रमादात्कुर्वतां कर्म्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिरिति पठित्वा । कर्म्मपूर्त्तिकामो विष्णुं स्मरेत् । ततः पिंडं गां अजं वायसान् वा खादयेत् । अग्नौ जले वाक्षिपेत् । ततो वैश्वदेव बलिकर्माणी कृत्वा । श्राद्धीय द्रव्याणि ब्राह्मणाय प्रतिपाद्य । य

मन करे. ( ओं प्रमादात्० ) इस मंत्रकों पढकें कर्मपूर्त्तिके अर्थ विष्णुका स्मरण करे । पश्चात् पिंड गौकों या बकरा, कागलोंकों खुलादेवै । अथवा अग्निमें या, भौतसे नदी आदिके जलमें डालदेवै और वैश्वदेव बलिकर्म करकें श्राद्धकी

सामग्री ब्राह्मणको देदेवे। फिर शक्तिमाफक वेद पढेहोये ब्राह्मणोंकों जिमावे (अथ नैमित्तिक बलिदान) ( ओं सौर भेया० ) इस मत्रसें गोके अर्थ ( ओं ऐंद्रवारुण० ) इस्सें कागलोंकों (ओ द्वौश्वानौ०) इस्से श्वानके अर्थ ( ओं हतते

थाशक्ति श्रोत्रियब्राह्मणान् भोजयेत्। अथ नैमित्तिक बलिदानमंत्राः । ओं सौरभेय्यः सर्व हिताः पवित्राः पुण्यराशयः। प्रतिगृह्णंतु मे ग्रासं गावस्त्रैलोक्यमातरः १ इदमन्नं गोभ्यो नमः। ओं ऐंद्रवारुणवायव्याः सौम्या वै नैर्ऋतास्तथा। वायसाः प्रतिगृह्णंतु भूमावन्नं मयार्पितम् २ इदमन्नं वायसेभ्योनमः। ओं द्वौ श्वानौश्यामशवलौ वैवस्वतकुलोद्भवौ। ताभ्यामन्नं प्रयच्छामिस्यातामेतावहिंसकौ २ इदमन्नं श्वभ्यांनमः। ओं हंतते अन्नमिदंमनुष्याय इति हंतकारबलिं दद्यात ४ एवं बलिकर्मकृत्वा। ओं यस्य स्मृत्याच नामोक्यातपो यज्ञ क्रिया

अन्नमिदमनुष्याय० ) इस मंत्रसें हंतकार बलि निकाले। इस तरहें बलि देके (ओं यस्यस्मृत्या० )

इस श्लोककों पढें फिर अतिथि, पुत्र, नोकर, बांधव, मित्र आदिके सहित खुद यजमान भोजन करैं । इसीतरे, माता,



दिपु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतमिति पठित्वा । अतिथि सुत भृत्य बांधवा दिभिः सह भुंजीत । एवमेव मातृ भ्रातृ पितृव्यादि श्राद्धप्रयोगः ॥ मातृश्राद्धे । अमुकगोत्रा या अस्मन्मातुरमुकदेव्याः सांवत्सरिकैकोद्दिष्ठश्राद्धमहं करिष्ये । इति संकल्पं कुर्यात् । ओं अमुकगोत्रे अस्मन्मातरमुकदेवि इदमासनं ते स्वधा इत्याद्युत्सर्गवाक्यं कर्त्तव्यम् ॥ इति पंडित श्री चतुर्थीलाल गोडविरचिते श्राद्धप्रकाशे पद्धतिखंडे अनुकल्पोक्तक्षयाहैकोद्दिष्ट श्राद्धपद्धतिः समाप्ता ॥

भाई, चाचे, आदिका सावत्सरिक श्राद्ध करणा चाहिये । इति प० चतु० विर० सावत्सरिकैकोद्दिष्टश्राद्ध प्रयोगः ॥

|| अथपंचकशांतिप्रयोगः || तावन्मरणकालकृत्यम् । तत्रदर्भेणापंचप्रातिमामनुष्याकृतयः कृत्वा।ऊर्णासूत्रेणावेष्ट्य।यवपिष्टेनानुलिप्य। शवसमीपेस्थंडिले पूर्वादिदिक्षुमध्येचस्थापयेत् ।।ततोदेशकालौसंकीर्त्य०। अपसव्येन। अमुकगोत्रस्यअमुकप्रेतस्यधनिष्ठादिपंचकजनितदुर्मरणसूचितवंशारिष्टविनाशार्थंपंचकविधानंकरिष्यइतिसंकल्प्य। प्रेतवाहायनमः १ प्रेतसखायनमः २ प्रेतपायनमः ३ प्रेतभूमिपायनमः ४ प्रेतहर्त्रेयनमः ५ इतिनाममंत्रेणआवाहनंस्थाप

अथ पंचकमरण विधि लिखतेहैं। प्रथम दर्भोका पंचपूतला मनुष्यके आकार करकें ऊनके तागोंसें वेष्टनकरै। फिर उनके ऊपर यवोंका चून पानी घोला होया लेप देवै और श्मशान भूमिमें जाकें शुद्ध जगें एक स्थंडिल वालुरेतका या मट्टिका बनावे। उसके ऊपर पूर्व, दक्षिण, पश्चिम, उत्तर, और बीचमें पुतला ५ स्थापन करकें संकल्पका उच्चारण करै। फिर अपसव्य होकें अमुक गोत्र नाम प्रेतकों धनिष्ठा आदि पंचकके भीतर मरणेसें होनेवाली दुर्गति और वंशवालोंके अरिष्ट दूर होनेके अर्थमें पंचकोंकेशांतिकी विधि करताहों ऐसें कहकें संकल्पका जल त्याग देवै। फिर (प्रेतवाहायनमः प्रेतसखाय, प्रेतपाय, प्रेतभूमि पाय, प्रेतहर्त्रे०)

इन पांचनाम मंत्रोंकरकें आवाहन स्थापन करै और गंध, पुष्प, धूप, दीप, नैवेद्य, तांबूल, दक्षिणा, आदिसें पूजा करकें प्रेतके ऊपर पांचों पूतला रखदेवै । प्रथम तो शिरकें ऊपर १ दूसरा दाहणी कूखके० २ तीसरा, बांवी कुखमें० ३ चौथा नाभिपें०४ पांचवां दोनों पगोंके ऊपर५रखकें उनके ऊपर पहलें कहे होये नाम मंत्रोंसें घृतकी आहु-

नंचकृत्वा। गंधमाल्यादिभिःसंपूज्य।दाहसमयेप्रेतस्योपरिन्यसेत् । तत्रप्रथमांशिरासि१ द्वितीयां दक्षिणकुक्षौ २ तृतीयांवामकुक्षौ ३ चतुर्थीनाभौ ४ पंचमींपादयोर्मध्ये ५ तदुपरिताभ्यो नाममंत्रैर्घृताहुतीर्दत्वा।ताभिः सहविधिनाशवंदहेत्।ततःसूतकांतेशांतिंकुर्यात्।इतिपंचकमरणविधानम् ॥ ॥ अथशांतिपद्धतिः ॥ सूतकांते तीर्थेगत्वा। तत्रस्नात्वा। अहतवस्त्रेपरिधाय स्वासने उपविश्य आचम्य।कुशोपग्रहः । कुशत्रयातिलजलान्यादाय। देशकालौसंकीर्त्य०(अ

ति देवै। फिर पूतलों करकें सहित विधि पूर्वक दाह करदेवै और सूतकके अंतमें शांति करै ( शांति करणेकी विधि लिखतेहैं ) सूतकके अंतमें ग्यारवें या बारवें दिन नदी, तलाव, तीर्थ, आदिपें जाकें स्नान करै। नवीन धोयाहुवा वस्त्र पहरै आसनपें बैठकें आचमन, प्राणायाम दर्भा धारण करै।फिर कुशत्रय तिल जललेकें संकल्प उच्चारण करै और अप-

शल्गमें अमुक गोत्र नाम वाले प्रेतकी पंचकमरण दुर्गति दूर होनेके अर्थ तथा हमारे घरमें संपूर्ण बांधवोंके आयु, आरो-
ग्य सुख, श्री प्राप्तिके अर्थ पंचक शांतिकर्म करताहों ऐसें कहकें संकल्पका जल छोडदेवे. । फिर सव्यसें ( ओं सुमुख
पसव्यं ) ओंअमुकगोत्रस्यअमुकप्रेतस्यपंचकजनितदुर्मरणदोषोपशांत्यर्थं ( सव्यं ) ममगृहे
सपरिवारस्य आयुरारोग्यसुखश्रीप्राप्त्यर्थं पंचकशांतिकर्माहंकरिष्य इतिसंकल्प्य । ओं सु
मुखश्चैकदंतश्चेत्यादिस्मरणपूर्वकगणेशनग्रहान् संपूजयेत् । ततो मंडलोपरि पूर्व० दक्षिण०
पश्चिम० उत्तरेषु मध्येच धान्यपुंजोपरि।ओं भूरसिभूमिरसीत्यादि पंचकलशान् संस्थाप्य।सर्वे
षु सर्वोषधि० दूर्वा० सप्तमृत्तिका० पंचपल्लव० पूगीफल० पंचरत्न० हिरण्यादीनि निक्षिप्य।
वस्त्रेणावेष्ट्यपूर्वकलशंदुग्धजलेन०१ दक्षिणकलशंदधिजलेन० २ पश्चिमकलशंघृतोदकेन०
३ उत्तरकलशं गोमायोदकेन० ४ मध्यकलशं गोमूत्रोदकेनच५ परिपूर्य प्रत्येकंतंडुलपूर्णपा
श्चैकदंतश्च० ) इत्यादि पाठ पढकें गणेश, सूर्यादि नवग्रहोंकी पूजा करै। अनंतर एक मंडल बनाकें उसपर, पूर्व, दक्षिण,
पश्चिम, उत्तर, और बीचमें चावल, मुंग, उडद, गेहुं, चीणे, आदि अन्नका पांच पुंजकरकें ( कलशस्थापन विधिसें )

पांच कलश स्थापन करे। फिर सपूर्ण कलशोमें जल सर्वोषधि, दूर्वा, पचपल्लव, सप्तमृत्तिका, पूगीफल, पचरत्न, सुवर्ण, गंगोदक, आदि डालके रक्तवस्त्रसे वेष्टन करे और पूर्वके कलशमें दुग्ध जल. १ दक्षिणकेमें दहीं जल. २ पश्चिममें, घृत जल. ३ उत्तरमें गोमय जल ४ बीचके कलशमें गोमूत्रजल ५ भरके जुदा २ चावलोंसें भराहुवा कांसिका पूर्ण पात्र

त्रं निधायातदुपरि क्रमेण पंचनक्षत्रदेवतानांप्रतिमाःस्वर्णमयीः अग्न्युत्तारणपूर्वकं स्थापयेत् अथावाहनं। पुष्पाण्यादाय। पूर्वे। ओं व्वसोः पवित्रमसिशतधारं व्वसोः पवित्रमसिसहस्रधा रं देवस्त्वासवितापुनातुव्वसोः पवित्रेणशतधारेणसुप्वाकामधुक्षः १ ओं वसुभ्योनमः वसून् आवाहयामि स्थापयामि॥ ॥दक्षिणे० । ओं व्वरुणस्योत्तंभनमसिव्वरुणस्यस्कम्भसर्ज नीस्थोव्वरुणस्यऽऋतसदन्यसिव्वरुणस्यऽऋतसदनमसिव्वरुणऽऋतसदनमासीद २ ओं वरु

कलशोंके ऊपर स्थापन करे और पात्रोके अंदर क्रमकरकें पांचदेवोंकी सुवर्ण मयी मूर्त्ति ५ दुग्धसे धोकें स्थापन करे और आवाहन करे। पुष्प हाथमें लेकें पूर्व कलशमें (ओं व्वसोः पवित्रमसि०) इस मत्रसें वसुदेवोंको १ और दक्षिणकों

(ओं व्वरुणस्योत्तं०) इस्सें वरुणकों० २ पश्चिममें ( ओं उतनोहिर्बुध्न्यः०) इस मंत्रसें अजैक पादकों० ३ उत्तरमें ( ओं
शिवोनामासि०) इस मत्रसें अहिर्बुध्न्यकों० ४ बीचके कलशपर ( ओं पूषंतवव्रते० ) इस मंत्र करकें पूषा देवताका आ-

णायनमः वरुणं आवाहयामि स्थापयामि॥ पश्चिमे०। ओं उतनोहिर्बुध्न्यः श्रृणोत्वजऽएकपा
त्पृथिवीसमुद्रः। विश्वेदेवाऽऋतावृधोहुवानास्तुतामंत्राः कविशस्ताऽअवंतु ३ ओं अजैकपादा
यनमः अजैकपादं०स्थाप०॥उत्तरे०।ओं शिवोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहि
ꣳसीः। निवर्त्तयाम्यायुषेनाद्यायप्रजननायरायस्पोषायसुवीर्याय ४ ओं अहिर्बुध्न्यायनमः
अहिर्बुध्न्यं० स्थाप०॥ मध्ये०। ओं पूषन्तवव्व्रतेव्वयन्नरिष्येमकदाचन। स्तोतारस्त इहस्म
सि ५ ओं पूष्णेनमः पूषणमावाहयामि स्थापयामि। इत्यावाह्य। ओं मनो जूतिर्जुषतामितिप्र
तिष्ठाप्य। अक्षतान्विकीर्यप्रत्येकं नाममंत्रेणषोडशोपचारैः पूजयेत्। ततस्तत्पार्श्वे अक्षतपुंजो

वाहन स्थापन करै ५। फिर (ओं मनोजूतिर्जुषता०) इस्सें पुष्प विकिरण करकें जुदे २ नाम मंत्रसें गंध, पुष्प, धूप, दीप,
नैवेद्य, तांबूल, पूगीफल, नारेल, दक्षिणा, ऋतुफल आदि षोडशोपचारों करकें पूजा करै। फिर कलशोंके उत्तर भाग-

मैं एक वेदीपे वस्त्रके ऊपर चौदह पुंज ( ढेरी ) चावलोंका करकें सुपारी १४ धरै। फिर उनके ऊपर चोदह (ओं यमायनमः१ ओं धर्मराजाय०२) इत्यादि नाम मंत्रों करकें यम आदि देवतोंका स्थापन करै और उसी जगें ईशानमें ( ओं

परिपुगीफलेषुयमादिचतुर्दशदेवताः स्थापयेत्। तद्यथा। ओं यमायनमः यमंआवाहयामि स्थापयामि १ ओं धर्मराजं० धर्मराजाय०२ ओं मृत्यवे० मृत्युं०३ ओं अंतकाय० अंतकं० ४ ओं वैवस्वताय० वैवस्वतं०५ ओं कालाय० कालं० ६ ओं सर्वभूतक्षयाय० सर्वभूतक्षयं० ७ ओं औदुंबराय० औदुंबरं० ८ ओं दध्नाय० दध्नं० ९ ओं नीलाय० नीलं० १० ओं परमेष्ठिने० परमेष्ठिनं० ११ ओं वृकोदराय० वृकोदरं० १२ ओं चित्रायनमः चित्रं० १३ ओं चित्रगुप्तायनमः चित्रगुप्तं आवाहयामिस्थापयामि१४ तत्रैव ईशान्यां। ओं अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः। सर्वेभ्यः सर्वशर्वेभ्योनमस्ते अस्तुरुद्ररूपेभ्यः १ ओं अघोरायनमः अघोरं० इत्यावाह्य। ओं मनोजूतिरितिप्रतिष्ठाप्य। ओं चतुर्दशयमेभ्योनमः। ओं मृत्युंजयायनमः।इतिषोड

अघोरेभ्योय० ) इस मंत्रसें मृत्युंजयको

और अश्विनी आदि सप्तविंशति नक्षत्र, सर्प देवता, इद्रादि दिक्पालोंकों स्थापन करै। फिर नाम मत्र करकें शुदि २
गध, पुष्पादिकोंसें पुजा करकें अग्निस्थापन करदेवै. ( अग्नि स्थापन करणेकी विधिलिखतेहैं ) होता पचकलशोंसें
पश्चिम, या, ईशानमें, चोकोण, चोवीस अगुल लबा, एक स्थडिल ( वेदी ) बनाके दर्भासें वहारे और दर्भाकों ईशानमें

शोपचारैः पूजयेत्। ततः तत्रैव अश्विन्यादिसप्तविंशतिनक्षत्राणि० सर्पान्० इंद्रादिदिक्पालांश्चावाह्य।गंधादिभिः पूजयेत्॥ अथाग्निस्थापनम्॥ तत्रादौ होताचतुरस्रंहस्तमात्रंस्थंडिलंकृत्वा। कुशैः परिसमुह्य। तान्कुशानैशान्यांपरित्यज्य।गोमयोदकेनोपलिप्य।तन्मध्येस्रुवमूलेनप्रागग्रप्रादेशमात्रं उत्तरोत्तरक्रमेणत्रिरुल्लिख्य। उल्लेखनक्रमेणाऽनामिकाङ्गुष्ठाभ्यांमृदमुद्धृत्यऐशान्यांक्षिप्त्वा तंदेशंजलेनाभ्युक्ष्य।तत्रतूष्णींकांस्यपात्रस्थमग्निंस्थापयेत्।ततःपंचसूक्तजपार्थं

स्थापन करै। गोमयका लेपा देवै। फिर वेदीके बीचमें स्रुवेके लेरके भागसें दश अगुल लबी उत्तरोत्तर दक्षिणसें लेकें
तीनरेखा लिखे और अनामिका, अगुठेकों मिलाकें रेखाकी रेत ( मट्टी ) उठाकें ईशानकों गेरै। फिर जलका छिंटा देकें
मंत्र रहित कासीके दो पात्रोंसें लाई होई अग्नि स्थापन करदेवै। पश्चात् पच देवोंके सूक्त

पचब्राह्मणवरणं०। तेच पंचकलशेषुपंचसूक्तानिजपेयुः। तत्र प्रथमकलशे। ओं कृणुष्वपाजरि
त्यादिपंचरक्षोघ्नमंत्राः ॥ १ ॥ द्वितीयकलशे०। ओं विभ्राडि त्यनुवाकः ॥ २ ॥ तृतीये०। ओं
आशुःशिशानो इत्याद्यप्रतिरथं० ॥३॥ चतुर्थे०। ओं नमस्तेरुद्रइत्यादिरुद्राध्यायः ॥ ४ ॥ पं
चमकलशे ओं ऋचंवाचंप्रपद्ये इत्यादिअध्यायः ॥ ५ ॥ ततो दक्षिणतोब्रह्मासनादि चरुश्रप
णांतं वृषोत्सर्गवत् कुशकंडिकाकर्मकृत्वा। अग्निपर्युक्षणान्ते आज्यहोमः। ओं प्रजापतये स्वा
हा इदंप्रजापतयेनमम। ओं इंद्रायस्वाहा इदमिंद्रायनमम। ओं अग्नये स्वाहा इदमग्नयेनमम।
ओं सोमायस्वाहा इदं सोमायनमम।इत्याघारावाज्यभागौहुत्वा।अक्षतान् गृहीत्वा।बलवर्द्धन

जपनेके अर्थ ब्राह्मणोंकों वरणन करकें रक्षोघ्न मंत्र आदि ऊपर लिखाहोया जपावै। फिर अग्निके दक्षिण तरफ ब्रह्मा-कों आसन देकैं (चरु) खीर पकाने पर्यंत कुश कंडिका विधान वृषोत्सर्गमें लिखे मुजब करकें घृतका होम करै (ओं प्रजापतये०) (ओं इंद्राय०) (ओं अग्नये०) (ओं सोमाय०) इत्यादि आघार, आज्यभाग, सञ्ज्ञक होम करकें चदन अक्षत पुष्पादिसें बलवर्द्धन

नाम मग्निकी पूजा करे। फिर वसु आदि प्रधान देवोंके अर्थ एक एकके निमित्त, समिध, पायस, तिल, घृत, आदि द्रव्यों करकें १०८। या. २८। या. ८ आहुति देवै (आहुति देनेका मंत्र लिखतेहैं) (ओं व्वसो पवित्र०) इस मंत्रसें वसुदेवताके अर्थ १०८।२८।८ आहुति. (ओं व्वरुणस्योत्तं०) इससें वरुणके अर्थ. १०८।२८।८। (ओं उतनोहिर्बुध्न्य०) इससें

नामानं वह्निं पूजयेत् । ततो वस्वादि प्रधान देवतानां प्रत्येकं समिच्चरुतिलाज्यादि द्रव्यैर ष्टोत्तरशतमष्टाविंशतिरष्टोवाऽहूति र्जुहुयात्।ततो यमादि अवोरान्तं प्रत्येकमेकैकाहूतिर्जुहूयात् तत्रमन्त्राः।ओं व्वसोः पवित्रमसिशतधारं व्वसोः पवित्रमसि सहस्रधारम् देवस्त्वासविताधुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा इदं वसुभ्यः १०८। २८। ८। ओं व्वरु णस्योत्तंभनमसि व्वरुणस्यस्कंभसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीदस्वाहा इदम्वरुणाय १०८। २८। ८। ओं उतनोऽहिर्बुध्न्यः शृणोत्वजऽएकपात्पृथिवीसमुद्रः।विश्वेदेवाऽऋता वृधोहुवानास्तुतामन्त्राः कविशस्ताऽअवन्तु

आजेकपादके अर्थ. १०८।२८।८। (ओं शिवोनामासि०) इससें अहिर्बुध्न्यके अर्थ. १०८।२८।८। (ओं
पूषतवव्रते०) इस मन्त्र करकें पूषा देवताके अर्थ १०८।२८।८। आहुति देवै। पश्चात् (ओं यमायस्वाहा०) इत्यादि

स्वाहा इदमजैकपादाय १०८ । २८ । ८ । ओंशिवोनामासि स्वधितिस्तेपितानमस्तेऽस्तुमामाहि ठ॰ सीः । निवर्त्तयाम्यायुषे नाद्याय प्रजननाय रायस्पोषाय सुप्रयजास्त्वाय सुवीर्य्यायस्वाहा। इदमहिर्बुध्न्याय । १०८। २८। ८। ओंपूषन्तवव्रते व्वयन्नरिष्येमकदाचन । स्तोतारस्त इहस्मसि स्वाहा । इदं पूष्णे १०८।२८। ८। इतिहुत्वा । ओंयमायस्वाहा इदंयमाय १ ओंधर्मराजाय॰इदं॰२ओंमृत्यवे॰इदं॰३ओंअंतकाय॰इदं॰४ओंवैवस्वताय॰इदं ५ओं कालाय॰इदं॰६ ओं सर्वभूतक्षायाय॰इदं॰७ओं औदुंबराय॰इदं८ओं दध्नाय॰इदं॰९ओं नीलाय॰इदं॰१०ओं परमेष्ठिने॰इदं॰११ओं वृकोदराय॰इदं॰१२ओं चित्राय॰इदं॰१३ओं चित्रगुप्तायस्वाहा इदं चित्रगुप्ताय१४इतिचतुर्दशयमाहुतीर्दद्यात् ।ततोग्रहेभ्यश्चरुहोमंकृत्वा। ओं

१४ आहुति और (ओं सूर्य्यायस्वाहा) इत्यादि ९ ग्रहोंके अर्थ होम करकें

(ओं अघोरेभ्यो०) इस मत्रकी १०८ तिलोंकी आहुति देवै. । फिर, प्रधान देवोंकी उत्तर पूजन करकें पायस (खीर) सें (ओं अग्नयेस्विष्टकृते०) इस मत्रसें स्विष्टकृत् होम करै। पश्च त्, घृत करकें (ओं भूःस्वाहा०) (ओं भुवःस्वाहा०

अघोरेभ्योथघोरेभ्य० इत्यघोरमंत्रेण अष्टोत्तरशतातिलहोमः कार्यः । तत वस्वादि प्रधानदेवतानां उत्तरपूजनं कृत्वा। चरुणा ओं अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टाकृते इति स्विष्टकृद्धोमं कुर्य्यात्। तत आज्येन ओंभूः स्वाहा इदमग्नये१ ओं भुवःस्वाहा इदंवायवे० २ ओं स्वः स्वाहाइदं सूर्याय०३ ओंत्वन्नोऽअग्ने० स्मत् स्वाहा इदमग्नी वरुणाभ्यां४ ओं सत्वन्नोऽअग्ने०एधि स्वाहा इदमग्नी वरुणाभ्यां० ५ ओं अयाश्चाग्ने० भेषज ठं० स्वाहा इदमग्नये० ६ ओं येतेशतं० स्वर्काः स्वाहा इदंवरुणादिभ्यः७ओं उदुत्तमं० अदितये स्वाहा इदं वरुणाय०८ ओं प्रजापतयेस्वाहा इदंप्रजापतये ९ इति नवाहुतयो हुत्वा । स्थंडिलपरित इंद्रादि दिग्पाले

(ओं स्व स्वाहा०) यहै व्याहृति होम, और (ओं त्वन्नोऽअग्ने०) (ओं सत्वन्नोऽअग्ने०) (ओं अयाश्चाग्ने०) (ओं येतेशत०) (ओं उदुत्तम०) इत्यादि वारुणहोम, और (ओं प्रजापतये०) यहै प्रजापति होम करै। फिर इद्रादिक

दिग्पालोंको अर्थ. माष ( उड़द ) चावल पकाकें अग्निके बाहरकर पूर्वादि दिशोंमें १० बलिदेवै। फिर होता यजमान सहित घृतसें पूगीफलादिक सहित स्रुवा भरकें ( ओं स्वाहाप्राणेभ्य० १ ओं दिवे स्वाहा० २ ) इन २ मत्रों करकें पूर्णाहुति होम करै।फिर सस्रव प्राशन ( अर्थात् प्रोक्षणीमें स्रुवेसें गेरा हुवा घृत, यजमानकों चटाकें ) आचमन करा

भ्यो माषभक्त बलीन् दद्यात्। अथपूर्णाहुतिः। ओं स्वाहाप्राणेभ्यः साधिपतिकेभ्यः पृथिव्यै स्वाहाग्नये स्वाहान्तरिक्षाय स्वाहा वायवेस्वाहा १ दिवेस्वाहा सूर्याय स्वाहा दिग्भ्यः स्वाहा चंद्राय स्वाहा नक्षत्रेभ्यः स्वाहाभ्यः स्वाहा व्वरुणाय स्वाहा नाभ्यै स्वाहा पूताय स्वाहा२इति हुत्वा।संस्रवप्राशनं० आचमनं च कृत्वा। पवित्राभ्यां जलमानीय। तेन ओं सुमित्रियानऽआ पऽओषधयः संत्वितिमंत्रेण शिरः संमृज्य। ओं दुर्मित्रियास्तस्मै संतु यो स्मान् द्वेष्टियंचवयंद्वि ष्म इतिप्रणितान्युब्जीकरणं।अग्नौ पवित्रप्रतिपत्तिः। बर्हिरैशान्यांक्षेपणम्।ब्रह्मणे सदाक्षिणपूर्ण

देवै और पवित्रीसें प्रणीताका जललेकें ( ओंसुमित्रियान० ) इसमंत्रसें यजमानकेशिरपरछिंटादेवै ( ओंदुर्मित्रिया० ) इसकोंपढकें प्रणीतापात्र ऊधाकरै। पवित्री अग्निमेंडालदेवै ( बर्हि ) अग्निकेबाहरकरबिछाई होई कुशा ईशान-

कोणमें गेरै और ब्रह्माके अर्थ पूर्ण पात्रदानकरै ( ब्रह्मग्रंथिखोलदेवै ) छ ब्राह्मणभोजन कराणेकासंकल्पलेव । फिर होता. पंचकलशोंका जललेकें यजमानके (ओंशन्नोमित्र० ओं अहानिशं० ओंशन्न इंद्रापूषणा० ओंशन्नोदेवी०ओंदेव-

पात्रदानम्।ब्रह्मग्रंथिविमोकः।ततो षड्ब्राह्मणभोजनसंकल्पः।पंचकलशोदकेनयजमानस्यसप रिवारस्याभिषेकः। तत्रमंत्राः। ओं शन्नोमित्रः० ओं अहानिशं ० ओं शन्नइंद्रापूषणा० ओं शन्नोदेवी० ओं देवस्यत्वा० ओं द्यौः शांतिः० । इति अभिषिच्य । पंचघटदानं । ओं अद्यामु क० प्रेतस्य पंचक मरणोत्पन्न दुर्गति निवारणार्थं तज्जनितवंशारिष्टविनाशार्थंच इमानि पंच घटानि स्वर्णप्रतिमावस्त्रफलयज्ञोपवीत धान्यसहितानि वस्त्रादि दैवतानि तद्देवताः प्रीतये नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे इति संकल्प्य ब्राह्मणेभ्यो दद्यात। तत आचा र्यादिभ्यः पयस्विनींगां १ महिषीं २ सप्त धान्यानि ३ सहिरण्यंतिलान्नं ४ सहिरण्यंघृतपात्रं च

स्यत्वा० ओंद्यौः शांति० ) इन मंत्रोंसें अभिषेककरै और यजमान पंचघटोंकेदानका संकल्पलेकें ब्राह्मणोंकोदेदेवै और आचार्य आदि सबहिकों गोः १ महिषी १ सप्तधान्य. १ सुवर्ण.१ तिल.१ घृत पात्र १

दवे। अन्यब्राह्मणोंकों भूयसी दक्षिणादेकें देवता अग्निका विसर्जनकरै और हाथमें जललेकें (इसपंचकशांति कर्मक
रकें अमुक प्रेतकी पंचक मरण दुर्गतिनिवृत्तहोवो और हमारे सकल अरिष्टदूरहोवो) ऐसेंकहकें पृथिवी परत्यागदेवें।
फिर (ओंयस्यस्मृत्या०) इसकों पढकें कर्मपूर्त्तिके अर्थ विष्णुका स्मरणकरै और सामग्री ब्राह्मणोंकोदेकें घृतमेंमुखदे-

५ दद्यात्। अन्येभ्योभूयसींदक्षिणादानं। ततो देवताग्निंचविसृज्य। हस्तेजलमादाय।अनेन
पंचकशांति कृतेन कर्मणा अमुकगोत्रस्य०प्रेतस्य पंचकजानितदुर्मरण दोषनिवृत्तिः ममगृहस
कलदुरितोपशांतिरस्तु इति पठित्वा उत्सृजेत्।तत ओं यस्यस्मृत्या०इति पठित्वा।कर्मपूर्त्तिका
मो विष्णुंस्मरेत्। शांत्युपकरणानि ब्राह्मणेभ्यो दत्वा।घृतेमुखावलोकनंकृत्वा स्नायात्।इति पंच
कशांति प्रयोगःसमाप्तः।इति श्रीबीकानेर राज्यान्तर्गतश्रीरत्नगढ नगर निवासिना पंडितगौ
डश्रीचतुर्थीलाल शर्मणा विरचिते श्राद्धप्रकाशे पद्धति खंडेप्रेतकल्पे अंत्येष्टिकर्मपद्धतिःसमाप्ता।

खकें स्नानकरै।इति पंचकशांतिप्रकारः॥ इतिश्रीबीकानेरराज्यांतर्गत श्रीरत्नगढनगरनिवासिना गौड पंडित वैद्यवर श्री-
चतुर्थीलालशर्मणा विरचिते श्राद्धप्रकाशे पद्धति खंडे प्रेत कल्पे अंत्येष्टि कर्मपद्धति भाषाटीका सहितासमाप्ता।

# अथ अन्त्येष्टि श्राद्धप्रकाशस्थविषयाणां अनुक्रमणिका ।

इति अन्त्येष्टि श्राद्ध प्रकाशः

भाषाटीका सहितः